## ।। अथ घटस्फोटविधिः ।।

### ।। श्रीहरये नमः ।।
### ।। मुख्यप्राणाय नमः ।।
### ।। श्रीगुरुभ्यो नमः ।।
### ।। परमगुरुभ्यो नमः ।।
### ।। श्रीमत्सत्यात्मतीर्थगुरुभ्यो नमः ।।

क्वचिज्जीवतोऽप्यन्त्यकर्मविहितम् । यथाप्रायश्चित्तानिच्छोः पतितस्य घटस्फोटे तथाहि महापातकेन उपपातकेन वा पतितो यदि प्रायश्चित्तं न करोति तदा तं गुरूणां बान्धवानां राज्ञश्च समक्षममाहूय तत्पापं प्रकटीकृत्य तं पुनःपुनः उपादिशेत् । 'प्रायश्चित्तं कुरु' 'स्वाचारं लभस्व' इति । स यद्येवमपि नाङ्गी-करोति तदारिक्तादि निन्द्यतिथौ सायह्ने सपिण्डा बान्धवाश्च सम्भूय दासीहस्तेन आनीतं अमेध्यकुत्सितजलादिपूर्णं घटं सर्वतो दास्याद्यन्वारम्भं कुर्वन्तो दास्या दासस्य वा वामपादेन न्युब्जं छिन्नाग्रदर्भेषु कारयित्वा दासीसहिता वदेयुः । 'अमुम् अनुदकं करोमि' इति नामग्रहणपूर्वकं प्रचीनावीतिनो मुक्तशिखाश्च सन्तः ततोऽधिकारी कर्ता दाहवर्ज्यं जीवन्तमेवोद्दिश्य पिण्डोदकदानादि-प्रेतकार्याणि एकादशाहान्तानि नाम्नैव कुर्यात् ।

**मिताक्षरायाम्—**

प्रेतकार्योत्तरं घटनिनयनमुक्तम् । एकाहमाशौचं सर्वेषाम् । यस्य घटस्फोटः कृतः तेन सह सम्भाषणस्पर्शादिसंसर्गो न केनापि कार्यः । करणे पतिततुल्यता । घटस्फोटप्रयोजनं तु पूर्वार्धान्ते उक्तम् । घटस्फोटनिश्चयोत्तरं घटस्फोटदिनात् प्राक् पतितज्ञातीनां धर्मकार्येष्वनधिकार इति कश्चित् ।

## कृतघटस्फोटस्य सङ्ग्रहविधिः—

कृतघटस्फोटस्य पुंसोऽनुतापे तत्पापप्रायश्चित्तान्ते संग्रहविधि-रुच्यते ।

## तत्रादौ शुद्धिपरीक्षा—

कृतप्रायश्चित्तो ज्ञातिसमक्षं गोभ्यस्तृणभारं दद्यात् । गोभिस्तृणे भक्षिते शुद्धिः । भक्षणाभावे पुनः प्रायश्चित्तं चरेत् ।

एवं निश्चितसंशुद्धौ समानेयुर्नवं घटम् ।
हैमं वा मृन्मयं वापि पवित्रजलपूरितम् ।।

ततः सपिण्डास्तं घटं संस्पृश्य अभिमन्त्र्य तज्जलैः 'पावमानीभिः' 'आपोहिष्ठा' इत्यादिभिः तरत्समन्दीभिश्च पापिन-मभिषिच्य तेन सह सर्वे स्नात्वा तं जलघटमस्मै दद्युः । स च 'शान्ता द्यौः शान्ता पृथिवी शान्तं विश्वमन्तरिक्षं यो रोचनस्तमिह गृह्णामि' इति यजुर्भिः तं घटं गृह्णीयात् । ततस्तदुदकं तेनैव साकं सर्वे पिबेयुः । ततः स कूष्माण्डमन्त्रैः आज्यहोमं कृत्वा सुवर्णगाश्च दद्यात् । ततस्तस्य जातकर्मादिव्रतबन्धान्ताविवाहान्ता वा संस्काराः कार्याः । एवं कृते शुद्धेन तेन संस्पर्शसम्भोजनादिव्यवहारं कुर्यात् । एवमुपपातके च कृतघटस्फोटस्य शुद्धिर्ज्ञेया ।

।। इति धर्मसिन्धौ सङ्क्षेपतः कृतघटस्फोटशुद्धिः ।।

# ।। अथ पतितानां घटस्फोटविधिः ।।

## ।। स्मृत्यर्थसागरे ।।

ब्रह्महत्यादिपातकैः म्लेञ्छाद्यन्नाशनैः ये पतिताः प्रायश्चित्तापेक्षारहिताः तेषां जीवतामपि घटस्फोटं कृत्वा अन्त्यकर्माशौचं च कार्यम् ।

तत्प्रकारस्तु– पतितबान्धवैः पतितपुत्रं वा गुणहीनं तद्बन्धुं वा पुरस्कृत्य शूद्रादिगृहस्थजीर्णघटं शूद्रदासीदासादिना जलेनापूर्य निन्दितचतुर्थ्यादिदिनवारादौ सायङ्कालमुखे सर्वैः स्नात्वा छिन्नाग्रान् दर्भान् भूमावास्तीर्य, जलपूरितघटश्च दर्भेषु संस्थाप्य, मुक्तशिखाग्रं यथा प्राचीनावीतिनः विद्यासम्बन्धिनः ज्ञात्यादिबान्धवाश्च घटस्फोटकर्तारमुपस्पृश्य दक्षिणामुखाः तेन दक्षिणाभिमुखेन पुत्रादिना वामपादेन एवं पतितनामगोत्रे गृहीत्वा 'श्राद्धौ अपात्रं कुर्मः' इत्युक्त्वा तत्स्फोटयेयुः[१]।

ततः अहोरात्रमशौचं कृत्वा द्वितीयदिने दशाहतिलोदकपिण्डदानानि कारयित्वा एकादशाहश्राद्धं कारयेयुः ।

तदुक्तं मनुना–

पतितस्योदकं कार्यं सपिण्डैर्बान्धवैः सह ।
निन्दितेऽहनि सायाह्ने ज्ञत्यृत्विग्गुरुससन्निधौ ।।

दासीघटमपां पूर्णं पर्यस्येत् प्रेतवत्पदा ।
अहोरात्रमुपासीत आशौचं बान्धवैः सह ।। इति ।

---

१. स्फोटयेयुः ज्ञात्यादिबान्धवाः घटस्फोटनं कुर्युः । 'घटस्फोटनिश्चयोत्तरं घटस्फोटदिनात् प्राक् पतितज्ञातीनां धर्मकार्येष्वनधिकार' इति कश्चित् ।

वसिष्ठोऽपि—

'दासोऽसवर्णपुत्रो बन्धुसदृशो वा गुणहीनः सव्येन पादेन प्रवृत्ताग्रान् दर्भान् लोहितान्वा उपस्तीर्य अपां पूर्णपात्रं अस्मै निनयेत् । निनेतारं चास्य प्रकीर्णकेशा ज्ञातयोऽन्वालभेरन्नपसव्यं कृत्वा' इति । प्रवृत्ताग्राः छिन्नाग्राः । घटस्फोटोभावे पतित-ज्ञात्यादिबान्धावानां धर्माधिकाराभावादवश्यं घटस्फोटाशौचादिकं कार्यम् ।

इति श्रीमन्नरसिंहचार्यैः कृतस्मृत्यर्थसागरे ।
स्यादाशौचतरङ्गोऽयं श्रीमध्वपतितुष्टिदः ।।

।। इति श्री छलारी नरसिंहाचार्यकृते
स्मृत्यर्थसागरे अशौचतरङ्गः समाप्तः ।।

## ।। अथ पुनः सविस्तरं धर्मसिन्धौ ।।

क्वचित्तु जीवतोऽप्यन्तकर्माशौचं च कार्यम् । यथा प्रायश्चित्तानिच्छोः पतितस्य घटस्फोटे;

'पतितस्योदकं कार्यं सपिण्डैर्बान्धवैः सह ।
निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ ।।

दासीघटमपां पूर्णं पर्यस्येत् प्रेतवत्तदा ।
अहोरात्रमुपासीरन्नाशौचं बान्धवैः सह ।।' इति मनूक्तेः ।

निन्दिते=रिक्तादौ ।

**अपरार्के वसिष्ठोऽपि–**

वेदविप्लावकशूद्रयाजकोत्तमवर्णवर्गपतिताः तेषां पात्रनिनयनमपात्रसंस्कारात् अकृत्स्नं पात्रमादाय दासोऽसवर्णपुत्रो वा बन्धुसदृशो वा गुणहीनः सव्येन पादेन प्रवृत्तग्रान् दर्भान् लोहितान् वा उपस्तीर्य, अपःपूर्णपात्रमस्मै निनयेत् । निनेतारं चास्य प्रकीर्ण-केशा ज्ञातयोऽन्वालभेरन् अपसव्यं कृत्वा । गृहेषु स्वैरमापद्येरन् । अत उर्ध्वं तेन तं धर्मयेयुः । तद्धार्माणस्तं धर्मयन्तः । इति ।

उत्तमवर्णाः=ब्राह्मणादयः, तेषां वर्गः समूहस्तस्मात् पतिताः ब्रह्महादयः । अपात्रसंस्कारः= कुत्सितपात्रसमूहः । प्रवृत्ताग्राः= छिन्नाग्राः । स्वैरं= यथैच्छं धर्मादिकं कुर्युः ।

अस्माद्वचनसामर्थ्यात् 'पात्रनिनयात् प्राक् पतितज्ञातीनां धर्मकार्येष्वधिकारः नास्ति' इत्यपरार्कः ।

'तस्य विद्यागुरून् योनिसम्बन्धांश्च सन्निपात्य सर्वाण्युदकादिप्रेतकार्याणि कुर्युः । पात्रश्चास्य विपर्यस्येयुः दासः कर्मकरो वाऽवकारादमेध्यं पात्रमानीय दासीघटात् पूरयित्वा दक्षिणामुखः

पदा विपर्यस्येत् । 'अमुम् अनुदकं करोमि' इति नामग्राहं सर्वेऽन्वालभेरन् । प्राचीनावितीनो मुक्तशिखा अप उपस्पृश्य ग्रामं प्रविशेयुः ।' इति गौतमोक्तेश्च ।

'उदकादि' इत्युक्तेः दाहनिवृत्तिः । प्रेतकार्याणि= एकादशाह-श्राद्धान्तानि । दास्याहृतोऽम्बुघटः दासीघटः । तेन उदकेन अमेध्यपात्रं पूरयित्वा दासादिन्युब्जं वामपादेन कुर्यात् इति हरदत्तः ।

अत्र नामग्राहवचनं उदकादिप्रेतकार्ये तद्वर्जनत्वार्थम् । तेन तत्तूष्णीं भवति । एतच्च प्रायश्चित्तानिच्छोः । 'तस्य गुरोः बान्धवानां राज्ञश्च समक्षं दोषानभिख्याप्य तमनुभाष्य पुनःपुन-राचारं लभस्व इति । स यद्येवमप्यनवस्थितमतिः स्यात् ततोऽस्य पात्रं विपर्यस्येत्' इति शङ्खोक्तेः ।

जीवन्तमेवोद्दिश्य पिण्डोदकश्राद्धानि दद्यात् । इति अपरार्कः ।

कृतप्रायश्चित्तस्य घटस्फोटे कृतेऽपि सङ्ग्रहविधिमाह गौतमः ।

'यस्तु प्रायश्चित्तेन शुद्ध्येत् तस्मिञ्छुद्धे शातकुम्भमयं पात्रं पुण्यह्रदात् पूरयित्वा स्रवन्तीभ्यो वा तत एनमुपस्पर्शयेयुः । अथास्मै तत्पात्रं दद्युः । तत्स प्रतिगृह्य जपेत् । 'शान्ता द्यौः शान्ता पृथिवी शान्तं विश्वमन्तरिक्षं यो रोचनस्तमिह गृह्णामि' इत्येतैः यजुर्भिः पावमानीभिः तरत्समन्दीभिः कूष्माण्डैश्च आज्यं जुहुयात् । हिरण्यं दद्याद् गाश्च आचार्याय । यस्य तु प्राणान्तिकं प्रायश्चित्तं स मृतः शुद्ध्येत् । सर्वाण्येव तस्मिन्नुदकादीनि प्रेतकार्माणि कुर्युः । एतदेव शान्त्युदकं सर्वेषूपपातकेषु' इति । घटस्फोटोत्तरं प्राणान्तिकप्रायश्चित्ते कृते तु मृत एव शुद्ध्येत् । न तत्र सङ्ग्रहविधिः । अथस्तेन विनापि प्रेतकर्म कुर्यादित्यर्थः । उपपातकेष्वपि घटस्फोटे कृते एवं कार्यमित्यर्थः ।

**याज्ञवल्क्यः—**

'चरितव्रत आयाते निनयेरन्नवं घटम् ।
जुगुप्सेरन्न चाप्येनं संवसेयुश्च सर्वशः ॥'

कृतघटस्फोटस्यैवायं परिग्रहविधिः इति मिताक्षरायामपरार्के । अन्यथा प्रयश्चित्तमात्रे एतत्प्रसङ्गात् । मनुरपि घटस्फोटमुक्त्वा, 'निवर्तेरंस्ततस्तस्मात् सम्भाषणसहासनैः' इत्युक्त्वा—

'प्रयश्चित्ते तु चरिते पूर्णकुम्भमपां नवम् ।
तेनैव सार्धं प्राश्नीयुः स्नात्वा पुण्यजलाशये ॥'

इति तच्छब्दं प्रायुंक्त ।

**अपरार्के वसिष्ठोऽपि—**

पतितानां चरितव्रतानां प्रत्युद्धारोऽथाप्युदाहरन्ति—

'अग्रेऽभ्युद्धरतां गच्छेत् क्रीडन्निव हसन्निव ।
पश्चात् पातयतां गच्छेत् शोचन्निव रुदन्निव ॥'

इत्याचार्यमातृपितृहन्तारस्तत्प्रसादादपगतपापा एषा तेषां प्रत्यासत्तिः । पूर्णहृदात् प्रवृत्ताद्वा सकाञ्चनं पात्रं माहेयं वाऽद्भिः पूरयित्वा 'आपोहिष्ठीयाभिः' एतमद्भिः अभिषिञ्चेयुः । 'सर्व एवा-भिषिक्तस्य प्रत्युद्धारः पुत्रजन्मना व्याख्यातः' इति ।

प्रत्युद्धारः= परिग्रहः ।

तत्रोद्धरतां हसन्निवाग्रेसरः स्यात् पातयतां घटस्फोटं कुर्वतां शोचन्निव पश्चाद्गच्छेत् । मातापित्रादिहतॄणां परिग्रहो न कार्यः । तत्प्रसादे सति चीर्णव्रतानां कार्यः ।

प्रवृत्तं=निर्झरः ।

पुत्रजन्मना इत्यभिषेकोत्तरं जातकर्मादयः संस्काराः पुत्रजन्मवत् कार्या इत्यपरार्के व्याचख्यौ ।

**अत एव विज्ञानेश्वरः—**

'घटेऽपवर्जिते ज्ञातिमध्यस्थो यवसं गवाम् ।
प्रदद्यात् प्रथमं गोभिः सत्कृतस्य हि सत्क्रिया ।।' इत्यत्र

गवां भक्षणाभावे पुनर्व्रतं चरेत् इत्येदत्प्रकृते । एवं चरितव्रतविधौ विशेषोऽयमिति वदन् घटस्फोटोत्तरं परिग्रह एव, एतन्न सर्वत्रेत्याह । तस्मात्कृतेऽपि घटस्फोटे प्रायश्चित्तं परिग्रह-विधिः पुनःसंस्कारा भवन्तीति सिद्धम् । तथा जीवच्छ्राद्धे कृते हेमाद्रौ **बौधायनः—** 'तत्राशौचं दशाहं स्यात्' इत्यलं प्रसङ्गेन ।।

**।। इति धर्मसिन्धौ घटस्फोटविधिः ।।**

## ।। अथ याजुषघटस्फोटप्रयोगः ।।

।। श्रीगुरुभ्यो नमः ।।

ब्रह्माण्डपुराणे–

घटश्राद्धं प्रकुर्वीत सपिण्डे पतिते सति ।
ज्ञातिभिर्बन्धुभिः सार्धं कर्ता तत्करणेच्छया ।।

पतितानां यथा क्लीबगर्भभ्रष्टसुरापिणाम् ।
कुलटानां तथा द्रोहिमोहिनां नास्ति निष्कृतिः ।।

नाशौचं नोदकं तत्र न कुर्यात् पैतृमेधिकम् ।
महापातकसञ्ज्ञानि पापानि विविधानि च ।।

ये मोहात् समनुप्राप्तस्तस्य नास्ति प्रतिक्रिया ।
पतितं पातयेद् वंशाज्जीवितं वा मृतञ्च वा ।।

ज्ञातयो बान्धवाश्चान्ये ग्रामवृद्धास्तथापरे ।
घटोत्सर्गविधिं कृत्वा त्यजेयुर्वनगह्वरे ।।

कर्ता प्रणम्य च सभां विज्ञाप्य तदनुज्ञया ।
अमारिक्ताष्टमीषष्ठ्यैकादशीषु च नैर्ऋतौ ।।

दक्षिणस्यां दिशि महानद्यां देवालये तथा ।
पतितस्य मुखं बाहू बध्वाऽऽनीय तदन्तिकम् ।।

सम्मार्जनीं जलघटं दास्या संवाह्य च स्वयम् ।
रक्तगन्धाक्षतकुशान् धृत्वा बन्धुजनैः सह ।।

सदध्योदनपात्रञ्च पक्वार्थं पात्रतण्डुलान् ।
अन्यमम्बुघटं नूत्नमाज्यं वस्त्रञ्च नूतनम् ।।

अन्नं पक्त्वा जलघटे प्रेतमावाह्य चार्चयेत् ।
पिण्डं दत्वा वामपादपार्ष्णिना पातयेद् घटम् ।।

पतितस्य मुखं दास्या सम्मार्जन्या च मार्जयेत् ।
तं घटं तु समावृत्य पातयेत् पृष्ठतो भुवि ।।

स्वगृहं स्वजनांश्चैव न गच्छेत् पतितो जनः ।
मम गोत्रसमुद्भूत पापिष्ठ मम वंशज ।।

इदमन्नश्च पानीयं भुक्त्वा गच्छ यथेच्छया ।
इति दध्योदनश्चान्नं पात्रस्थसलिलं दिशेत् ।।

तद्वस्त्रं तु द्विधा कृत्वा ब्राह्मणाभ्यां प्रदाय च ।
त्यक्तबन्धं समुत्सृज्य तन्मुखं नावलोकयेत् ।।

नद्यां स्नात्वा गृहं गत्वा पुण्याहं वाचयेत् ततः ।
लौकिकाग्निं प्रतिष्ठाप्य स्वगृह्योक्तविधानतः ।।

तत्र चाज्याहुतीर्हुत्वा गायत्र्याष्टोत्तरं शतम् ।
पतिते तु मृते तस्मिन् नाशौचं नोदकक्रिया ।।

।। इति याजुषप्रयोगे घटस्फोटनश्राद्धविधिः समाप्तः ।।

# ।। अथ याजुषघटश्राद्धप्रयोगः ।।

## ।। श्रीगुरुभ्योनमः ।।

## ।। श्रीहरये नमः ।।

यस्मिन् कस्मिन् पतिते जने तत्सपिण्डः कर्ता यथाशक्ति-दक्षिणां धृत्वा । समस्तसम्पत्स.......नमः ।। इति परिषदं सभाश्च त्रिः प्रदक्षिणीकृत्य । तत्पुरतो दक्षिणां निधाय । नमो महद्भ्यो नमो.....देवाः । ॐ नमः सदसे सदसस्पतये । नमः सखीनां पुरोगाणां चक्षुषे । नमो दिवे नमः पृथिव्यै सप्रथसभां मे गोपायये च सभ्यास्सभासदः तानिन्द्रियावतः कुरु सर्वमायु-रुपासताम् । सर्वेभ्यो महाजनेभ्यो नमो नमः । इति नमस्कृत्य । अशेषेह परिषत् मदीयां विज्ञापनं सम्यगवधार्य मया समर्पिता-मिमां दक्षिणां स्वीकृत्य अस्मद्वंशजातः कश्चिज्जनः सदाचार-परिभ्रष्टः दुराचारनिरतः ब्राह्मण्यात् पतितश्चासीत् । तस्य का वा निष्कृतिः शेषैरस्माभिः किं कर्तव्यमिति यथा शास्त्रविधिं निश्चित्य उपदिश्य मामनुगृहाण । इति प्रार्थयेत् ।

ततोऽनुवादकः— हे यजमान! अमुकगोत्र अमुकनामधेय अशेषा परिषत् त्वदीयां विज्ञापनां सम्यगवधार्य त्वया समर्पितां दक्षिणां गृहित्वा । युष्मद्वंशे जातस्य पतितजनस्य । पतितताना-मित्यादिबहवश्चेत् । ब्रह्मण्डपुराणोक्तप्रकारेण घटश्राद्धेन विसर्जनं कर्तव्यम् । एवं त्वया सम्यगाचरिते सति भवान् निष्कल्मषो भवेत् । इत्युक्ते सभासदोऽपि तथास्त्विति प्रतिब्रूयात् । ततः कर्ता बन्धुभिरालोच्य राज्ञे निवेद्य तत्कर्मण्यधिकारार्थं स्वयं कृतशिरोवपनः ततः कृच्छ्रत्रयं कुर्यात् । ततो रिक्ततिथौ कृष्णाष्टम्यां अमायां वा ग्रहानुकूल्ये सति ज्ञातिर्बन्धुभिः सह

जलपूर्णघटं सम्मार्जनीञ्च दास्यावाहयित्वा अन्यं जलपूर्णघटं सदध्योदनशरावं पिण्डार्थं तण्डुलान् । पचनार्थं पात्रं नूतनैकवस्त्रं रक्तगन्धाक्षतपुष्पकुशान् गृहित्वा, दक्षिणस्यां नैऋत्यां वा दिशि गत्वा, तत्राश्वत्थमूले देवालये चतुष्पथे वा शुद्धजलेन सम्मर्जन्या मार्जयित्वा, अद्भिः प्रोक्ष्य, प्रगग्रान् दर्भान् संस्तीर्य तेषूदकघटादिकानि निधाय पतिते एतत्कर्मानङ्गीकारे भुजमुखानि बध्वा, आनीतं पतितजनं तत्समीपे संस्थाप्य कर्ता स्नात्वा आर्द्रवासाः दर्भेष्वासीनः दर्भान् धारयमाणः पवित्रपाणिः प्रणानायम्य एवंगुण....पुण्यतिथौ मद्वंशे मद्गोत्रोद्भवस्य पतितस्य घटश्राद्धविधिना विसर्जनं करिष्ये । इति सङ्कल्प्य । स्वशिखां विसृस्य प्रचीनावीति । तण्डुलैः पचनपात्रे अन्नं कृत्वा एकं जलघटं रक्तगन्धाक्षतपुष्पैरभ्यर्च्य, वस्त्रेणाच्छाद्य,

आयाहि प्रेतगम्भीरैः पूर्वैः सौम्यपथोत्तमैः ।
प्रजामस्मभ्यमायच्छ रयिं दीर्घायुरेव च ।।

इति मन्त्रेण घटरूपपतितप्रेतदेवतामावाहयामि । इत्यावाह्य, उचितोपचारैरभ्यर्च्य, अन्नं पात्रान्तरे निक्षिप्य अभिगार्य निवेदयित्वा, तत्पुरतो भूमिं समालिप्य, दक्षिणाग्रान् दर्भान् आस्तीर्य, तच्छेषान्नेन पिण्डं कृत्वा, पतिताय इमं प्रेताय इमं ददाम्युपतिष्ठतु । इत्यवाचीनपाणिना पिण्डं दत्वा तदुपरि तृप्यस्व इत्युदकं दत्वा पचनपात्रे उदकं निनीय,

मया सृष्टो जलघटः प्रेतेन सह चाद्य वै ।
पतितं पालयाशु त्वमनेन कृतकर्मणा ।।
अम्भस्त्वं सर्वजगतामाप्यायनकरं सदा ।
यस्मादनेन पतितं तद्धाम नय चोन्नतम् ।।

इति कलशस्थोदकैः पतितं मार्जयित्वा उत्थाय, तद्धटं पृष्ठतो न

वेक्ष्यमाणः वामपादपार्ष्णिघातेन पातयित्वा, ततः तस्या सम्मार्जन्या पतितस्य मुखं त्रिर्मार्जयित्वा, तया दास्या जलघटं स्कन्धे वाहयित्वा, पतितं चिताग्निमेव त्रिरप्रदक्षिणं कारयित्वा पृष्ठतो भूमौ कलशं विसृजेत् ।

नारायणस्मरणं कृत्वा,

स्वगृहं स्वजनांश्चैव न गच्छेत् पतितो जनः ।
मम गोत्रसमुद्भूत पापिष्ठ मम वंशज ॥
पतितत्वं विसृष्टोऽसि यथेच्छं गच्छ माचिरम् ।
यदाकदा वापि पुनर्माऽऽगच्छ मम मन्दिरम् ॥
गच्छास्माभिर्विसृष्टोऽद्य त्यक्तस्त्वं सर्वकर्मभिः ।
नास्माकं तु त्वया कृत्यं न भवास्माकमन्तिके ॥

इति पठित्वा ।

ततः अखण्डितवस्त्रं पतिताभिमुखं द्विधा कृत्वा ब्रह्मणाभ्यां दत्वा शरावदध्योदनं भक्षय । पचनपात्रस्थोदकं पिबेदिति निर्दिशेत् । इत्युक्त्वा तं पतितं नावलोक्य विसर्जयेत् ।

विश्वम्भरः पञ्चभूतास्साक्षिण्यः सर्वदेवताः ।
मया त्यक्तोऽद्य पतितः श्रृण्वन्तु वचनो मम ॥
दिशांपतीन्नमस्यामि सर्वकामफलप्रदान् ।
कुर्वन्तु सफलं कर्म कुर्वन्तु सततं शुभम् ॥

नमस्कृत्य, निवृत्तान्यमार्गेण गत्वा, उपवीतिबद्धशिखो भूत्वा, बन्धुभिः सह नद्यादौ सम्यक् स्नात्वा, शुभ्रवस्त्राणि धृत्वा, ब्राह्मणेभ्यो गन्धपुष्पाक्षतताम्बूलानि दत्वा, स्वयमलंकृत्य तैः सह गृहं गत्वा, पुण्याहं वाचयित्वा, दशदानानि कृत्वा, गृहमध्ये लौकिकाग्निं प्रतिष्ठाप्य, स्वशाखोक्तप्रकारेण गायत्र्या अष्टोत्तरशतं हुत्वा, होमशेषं समाप्य, ब्राह्मणान् भोजयित्वा, ततः आशीर्वादः

**कर्तव्यः । ज्ञातिभिः सह भुञ्जीत । ततः पतितः देशान्तरं गत्वा वा स्वदेशे स्थित्वा वा मृतश्चेत् ज्ञातीनां सूतकं नास्ति । प्रेतकर्माणि च न कुर्यात् । घटोत्सर्गकरणात्पूर्वं मृतश्चेत् तत्प्रतिकृतिदर्भग्रन्थिं कृत्वा तस्यैतत्कर्म कुर्यात् । पितृमातृपितृव्याणां ज्येष्ठभ्रातृणां घटोत्सर्गविधिं न कुर्यात् ।**

**।। इति याजुषघटश्राद्धप्रयोगः समाप्तः ।।**

## ।। अथ घटस्फोटेतिहासः ।।

घटस्फोटविधिं वक्ष्ये सावधानमना श्रृणु ।
सेतिहासं पुरावृत्तं पापारण्यदवाऽनलम् ।।

पुरा गौतमसंशप्त ब्राह्मणानां कुलेषु वै ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ।।

धर्मलोपात्प्रदुष्यन्ति स्त्रियः पुरुषपुङ्गवाः ।
दोषात्पातित्यमाप्नोति सङ्करो भवति ध्रुवम् ।।

सङ्करो नरकायैव भवतीत्यनुशुश्रुमः ।
स्वबन्धुषु यदा यस्य पातित्यमुपजायते ।।

पतितः स हि विज्ञेयः सर्वकर्मबहिष्कृतः ।
तद्बन्धुष्वप्रवेशार्थं घटस्फोटो विधीयते ।।

घटस्फोटविधिश्चैव धर्मशास्त्रेषु दृश्यते ।
यः करोति घटस्फोटं स पूतो भवति ध्रुवम् ।।

तत्प्रयोगविधिः प्रोक्तः प्रयागे पैतृमेधिके ।
मातापितृपितृव्याग्रभ्रातृनुद्दिश्य नाचरेत् ।।

पुरा दक्षिणपाश्चाले पितृहूर्नाम वै पुरी ।
तत्पुर्यामधिपो मान्यो राजा श्रुतधरो वसन् ।।

धर्मतः पालयामास न्यायैकनिपुणः सदा ।
तत्पुर्यां ब्रह्मणः कश्चिद् गुडालो नाम वेदवित् ।।

तस्य भार्यातिदुःशीला पतिनिन्दापरायणा ।
जारसेवापरात्यन्तं परगेहविहारिणी ।।

अवं वसन्ती सा तन्वी तत्याज स्वगृहं हठात् ।
भरणीया सदा भार्या इति मत्वा गुडालकः ।।

विचिन्वन् निकटग्रामन्पल्लीपट्टणसञ्ज्ञितान् ।
दुःखाक्रान्तो जगामासावटवीं मृगसङ्कुलाम् ।।

ददर्शासावरण्ये तां भिल्लनायकमन्दिरे ।
तत्रस्थां जारिणीं तन्वीं भिल्लनायकसंयुताम् ।।

तेनैव दूषितां पत्नीं चिन्तयामास धर्मतः ।
किं कार्यं किमकार्यश्चेत्यत्र सन्देहसंयुतः ।।

श्रुतदेवाख्यराजानमगमत् स गुडालकः ।
सर्वं तच्चेष्टितं स्मृत्वा श्रावयामास विस्तरात् ।।

धर्मैकमानसो राजा विचार्य च पुनःपुनः ।
आनाय्य विद्वत्प्रवरान् सर्वमाचष्ट तत्वतः ।।

तेऽपि धर्मान् समालोच्य कर्तारं तु कलौयुगे ।
सङ्क्रमेत पुण्यपापश्च निश्चिन्वन्तः परस्परम् ।।

गुडालविप्रवनिता चरित्रं दोषदूषितम् ।
सम्यग् विचार्य ते सर्वे प्रायश्चित्तमवोचतुः ।।

**ब्राह्मणाः–**

पतौ दुष्टे सती कुर्यात् घटस्फोटं नृपोत्तम ।
यदि दुष्टा सती कुर्यात् पतिः स्फोटं घटस्य वै ।।

तत्फोटस्य क्रमं राजन् वक्ष्यामोऽधर्मसंयुतम् ।
आदौ पर्षदुपस्थानं सभायाः त्रिःप्रदक्षिणम् ।।

स्वशक्त्या यत्समुत्पन्नं तद्द्रव्यस्य समर्पणम् ।
पतितस्य तथा कर्तुः गोत्रसम्बन्धमुच्चरन् ।।

अघप्रख्यापनं चैव तत्त्यागं प्रर्थयेत् पुरः ।
ततः सर्वे सभास्तारः विचार्य बहुधा त्वघम् ।।

सम्यङ् निश्चित्य पतितप्रायश्चित्तं यथाविधि ।
ब्रूयुस्तत्पतितत्यागं घटस्फोटाख्यकर्मणा ।।

श्रुत्वा परिषदुक्तीश्च प्रत्युक्तीस्तदनन्तरम् ।
राजा कर्तारमुद्दिश्य घटस्फोटमवोचत ।।

ततः कर्ता गोत्रवृद्धग्रामवृद्धसवन्वितः ।
आनीय पतितं बध्वा मुखबाह्वादिकं दृढम् ।।

घटश्राद्धं प्रकर्तव्यं ज्ञातिबन्धुसमन्वितम् ।
पतितः पातयेद् वंशं जीवन्वा मृतकोऽपि वा ।।

अतः पातित्यमुक्त्यर्थं घटस्फोटं चरेद् बुधः ।
ज्ञातयो बान्धवाश्चैव ग्रामवृद्धास्तथा परे ।।

घटोत्सर्गविधिं कृत्वा त्यजेयुर्वनगह्वरम् ।
दक्षिणाशानिनयनं कुर्यादित्याह वै यमः ।।

सम्मार्जनीं जलघटं दास्याः संवाह्य च स्वयम् ।
रक्तगन्धाक्षतकुशान् धृत्वा बन्धुजनैः सह ।।

अन्यद्धटं तण्डुलांश्च घृतं वस्त्रञ्च नूतनम् ।
पक्त्वा चान्ये जलघटे प्रेतावाहनमाचरेत् ।।

पिण्डदानं ततः कुर्यात् पतितायेममुच्चरन् ।
कर्ता घटं वामपादपार्ष्णिना पातयेद् विधिः ।।

पतितः पातयेद् वंशं जीवन्वा मृतकोऽपि वा ।
अतः पातित्यमुक्त्यर्थं घटस्फोटं चरेद् बुधः ।।

ज्ञातयो बान्धवाश्चैव ग्रामवृद्धास्तथापरे ।
घटोत्सर्गविधिं कृत्वा त्यजेयुर्वनगह्वरम् ।।

दक्षिणाशानिनयनं कुर्यादित्याह वै यमः ।
सम्मार्जनीं जलघटं दास्याः संवाह्य च स्वयम् ।।

रक्तगन्धाक्षतकुशान् धृत्वा बन्धुजनैः सह ।
अन्यद् घटं तण्डुलांश्च घृतं वस्त्रं च नूतनम् ।।

पक्त्वा चान्ये जलघटे प्रेतावाहनमाचरेत् ।
पिण्ड दानं ततः कुर्यात् पतितायेममुच्चरन् ।।

कर्ता घटं वामपादपार्ष्णिना पातयेद् विधिः ।
पतितस्य मुखं दास्याः सम्मार्जन्या च मार्जयेत् ।।

तद्घटं तु समावृत्त्य पातयेत् पृष्ठतो भुवि ।
स्वगृहं स्वजनांश्चैव न गच्छेत् पतितो जनः ।।

मम गोत्रसमुद्भूत पापिष्ठ मम वंशज ।
पतितत्वं विसृष्टोऽसि यथेष्टं गच्छ मा चिरम् ।।

इत्युक्त्वा तं च विसृजेत् तन्मुखं नावलोकयेत् ।
ततस्तु स्वगृहं गत्वा स्वगृह्यविधिना ततः ।।

अग्निप्रतिष्ठां कृत्वाऽथ गायत्र्याष्टोत्तरं शतम् ।
होमश्च चरुणाज्येन कारयेद् विधिपूर्वकम् ।।

नमस्कुर्याद् ब्राह्मणानामाशीः प्राप्य विधानतः ।
स्वशक्त्या दक्षिणां दत्वा भुञ्जीयाद् बन्धुसंयुतः ।
एवं यः कुरुते विप्रो पातित्यात् प्रविमुच्यते ।।

।। इति ब्रह्मण्डपुराणे घटस्फोटप्रकरणे घटस्फोटेतिहासः समाप्तः ।।